


# मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु, (आ. प्र.) भारतम्

संपुटः ८ | 15 NOVEMBER 1970 | क्रमांकः ११



[साधारण-कार्तिकांकः] शकः १८९२ [मूल्यम् ४० पैसाः

# विषयसूची




# भारतं सेवस्व

सत्यं शिवं सुन्दरम् – भारतम्-
नित्यं नवं निर्मलं – सेवस्व ॥
नीत्या परं पूतया – प्रीतया-
मत्या सदा स्तुत्यया ॥

कर्मदेशोयमिति गण्यते पूर्वैः
धर्मदेशोयमिति भण्यते विबुधैः,
दिव्यदेशोयमिति भाव्यते प्राज्ञैः
भव्यदेशश्चेति परिकीर्त्यते जनैः ॥ ॥ सत्यम् ॥

भूमिरियमस्ति माताऽस्माक मखिला
देशोयमस्मत्पिता चेति विदितम्,
जलपवनधान्यादिकं – भुञ्ज्महे
एतद्गुरावर्धितं – हे सखे ॥ ॥ सत्यम् ॥

एतद्धराधूलिजातपरिपूतोसि
एतत्परागे लयिष्यसि नितान्तम्,
एतया जीवितश्चैतया वर्धितः
भारतीयोसि निजजन्मना पूतोसि ॥ ॥ सत्यम् ॥

# सम्पादकीयम्

## प्रजाविडम्बनम्

क्षेत्राणां परिमिति नियमनम् , नगरसम्पत्तीनां परिमितिनियमनमिति अधुना गीयते अधिकोशजातीयीकरणगीतत्यागानानन्तरम्। क्षेत्राणां परिमितिकल्पसेन बहुक्षेत्रं सर्वकारायत्तं भविष्यति, अवशिष्टं तच्च क्षेत्रहीनेभ्यः कृषिज्ञेभ्यः प्रदास्यते, तेन च महत् फलम् लभ्येतेति अभ्यूह्यते। क्षेत्रपरिमाणम् च कुत्रचित् त्रिंशदकरपरिमितम् कुत्रचित् पञ्चदश यकरपरिमितमिति व्यवस्थाश्च कल्प्यन्ते। विचार्यमाणे बृहत्क्षेत्रकृष्या एव लाभो दृश्येत, नाल्पक्षेत्रकृष्या। तेन च ह्रस्वीकृतम् च क्षेत्रम् विभजनविक्रयादिना पुनश्च ह्रसितम् भूस्वामिनः अनोपकम् तैः उपेक्ष्यमाणम् च अकृष्यमेव शिष्येत्। क्षेत्रगृहीतारश्च सर्वे क्षेत्रम् कृषेयुः इति दिवा स्वप्नमात्रम् प्रायशस्सर्वे पीदानीं कर्षका अपि अलसाः पङ्गा द्रजसो वा भीताः वातातपवर्षेभ्योऽपसरन्ति नियतम्। धान्यादीनां एतावन्मूल्यमपि न तिष्ठति भाविनि काले। सर्वकारेण मूल्योद्धरणम् कर्तुं नैव शक्येत च। अतः फलस्य बाहुल्येपि मूल्यस्य ह्रासे क्षेत्राणि अनाथान्येव संपद्येरन्। श्रूयते वृद्धैः कदाचित् शतवत्सरेभ्यः पूर्वं यत् क्षेत्रकरम् अर्पयितु मशक्ताः केचन जनाः ग्रामानेव उज्झित्य देशान्तरम् गताः, तत्क्षत्राणि च ग्रामाण्यादयः स्ववशे अकुर्वन्निति।

अपि चेदानीं सुकुमारमतय स्सुकुमारदेहाः कर्षकबालाः कार्मिकबाला अपि अधीत्य नगरे वस्तुम् उन्नतोन्नत मुद्योगं कर्तुं केवलम् वांछन्ति, स्वसंकल्पितात् किंचिन्न्यूनमपि तं निराकुर्वन्ति। एवं स्थिते को वा क्षेत्रम् कृषेत् ? अस्या आपदोनुगुणम् सर्वकारः कृषिकार्मिकभृति अपि वर्धयति। तत्र च बन्धाः प्रबन्धाश्च आसन्ना एव। एवं च कृषिकर्मणि महत्यापत् समापतिष्यति।

यद्यपि यन्त्रमूला कृषिः आघोष्यते तथापि क्षेत्राणामल्पत्वात् तन्निर्वहणमपि असाध्यमेव परिणंस्यते। पर्याप्तस्य क्षेत्रस्य अभावे नैकोपि कृषिकर्मणे स्वात्मानं नियोजयेत्।

वस्तुतः अधुना अधिकारिवर्गेषु बहुशः (आन्ध्रेषु) क्लिश्यन्ति एतया समस्यया। मूल्यह्रासः, धान्यराशीनां रक्षणानवकाशः, क्रेतृणामभावश्चेति क्षेत्रपतेः संकटसमुच्चयः। अनेन साकम् क्षेत्रापहारोपि यदि भवेत् तर्हि नखव्रणोपरि मुसलप्रहार एव।

एतन्निवारणार्थं नगरसंपत्तीनां परिमितिव्यवस्थानादः आवेशितः। इदानीं इदम् न्याय्यमिद मन्याय्यमिति वक्तुम् नैव पार्यते। बहुभिः बहुधा घोषितम् न्याय्यमेव भवति। "पदुगुराड्ड माट पाडियै धर जेल्लु" दशभिर्यदुक्तम् तदेव धरायां न्याय्यमित्यर्थिका इति वेमनसूक्तिरस्त्यान्ध्रेषु। तदनुगुणम बहुजनवादस्य सिद्धान्तत्व मूरीकर्तव्यमेव। बहुभिः अयम् नन्दीत्युक्ते नन्द्येव भवति, पन्दीत्युक्ते (वराह इत्युक्ते) पन्द्येव (वराह एव) भवति। न तत्र किमपि विमृष्टव्यम्। अथवा विमर्शे कौरवसभायां विकर्णेन यादृशी संभावना लब्धा सैव लभ्येत।

वस्तुतः अधिकारिषु कस्यापि संपदां संकोचेच्छा न भवत्येव। अपितु प्रजानां बहुलसंख्याकानां सम्मतिप्राप्तये यद्गीतमालापितम् पूर्वं, तदद्य पुनरावर्तनीयम् वर्तते तैः। निर्वाचनस्य भङ्गुरच्छाया, वेताल एव पुरतः परिस्फुरति। तदर्थं एतन्मत्रस्य अनुसंधान जपहोमदाननतर्पणादिकं यथाशक्ति कर्तव्यमास्ते। अन्यथा स वेतालः आत्मनः शून्यकूपे पातयेत्। तदर्थं पुनरियम् वाणी श्राव्यते। क्रियाकलापश्च कश्चन आरच्यते। त्रिचतुर्लक्षपरिमितायाः नगरसंपत्ते अचाल्यत्वम् तदधिकायाः जात्यधीनत्वं च आलोच्यते। एतेन स्वसंपत्तेर्भंगो न भवेत् यत्किंचित् कार्यशूरत्वम् च प्रकटितम् भवेत् इति ते मन्वते।

एतत्परिमाणाधिकसंपत्तिभाजः कति वा वर्तन्ते ? तैः विसृष्टेन धनेन राज्यकोशस्य को वा कोणः पूर्येत ? हास्यप्रायमिदम् रूपकं दृश्यते। अन्यथा सर्वसंपत्तीनां क्षेत्राणां गृहाणां वाणिज्यानां उद्योगानां वाऽस्तु आयस्य कनिष्ठगरिष्ठपरिमाणस्य निर्णयः किं न क्रियते ? उद्योगवेतनेषु च बृहत्तारतम्यस्य संरक्षणे किं कारणम् ?

अनया अस्तव्यस्तघोरण्यैव भीताः निरुत्सुकाश्च मेधाविनः देशान्तरं गताः न प्रतिनिवर्तन्ते। तदाकर्षणार्थं च विभिन्ननीतेर्योजने क्रमशः सर्वेषु च विषयेषु सा अनुपाल्यैव भवेत्।

अधुनास्मद्भारते महाक्षेत्रिण एव क्षेत्रभञ्जनम् आघोषयन्ति, महाधनिका एव धनिकविनाशं प्रलपन्ति, दुष्टा एव न्याय्यं भाषन्ते, क्रूरा एव शांतिमुपदिशन्ति, चोरा एव चोरश्चोरः, गृहाण गृहाणेति भाषमाणाः जनेषु मिलित्वा आक्रोशन्ति।

अजाविकदम्बेषु वृकाः प्रविश्य अजवत् अविवच्च रुवन्तीति भारतस्य रक्षणे भगवानेव शरणम्।



# सुलभपाठमाला ४९

## वृक्षाः १२

## बीजपूरः

---

अयं च क्षुद्रवृक्षः उद्यानेषु गृहोद्यानेषु पोष्यते। अयं च उपपञ्चवितस्ति-परिमितोन्नतः प्रवर्धते। अस्य पत्राणि सान्द्राणि प्रायशः द्व्यंगुलदीर्घाणि किञ्चिद् वर्तुलानि च संदृश्यन्ते। अस्य वृक्षस्य अनेकजातयः प्रथन्ते भारते। अस्य फलानि च प्रायशः बीजैः पूरिता भवन्ति। अतः खल्वस्य बीजपूर इति नाम विश्रुतमासीत। आन्ध्रभाषायां "जाम" इत्यस्य नाम। अस्य फलं वर्तुलम् किंचित् दीर्घं वा जम्बीरफलपरिमाणमारभ्य कपित्थफलपरिमितिपर्यन्तं भवति। फलवर्णेपि भेदः अनुभूयते श्वेतः रक्तश्चेति। फलस्य पाटने अन्तस्सारः यदि धवलो भवति तत्र श्वेतबीजपूरम्, अरुणो यदि तद्रक्तबीजपूरमिति। तत्रापि अधममध्यमोत्तम-जातयः स्वादविशेषेण भवन्ति। प्रायशः अन्तर्बीजानां न्यूनतायां उत्तमत्वं मधुर्यानु-भवे वा, तद्भिन्नत्वे तद्भिन्नत्वमिति क्रमः।

इदं फलं आन्ध्रदेशे बहुलं लभ्यते। इदं मूल्येनाल्पं सकलजनास्वाद्यं भवति वदन्ति जना एतद्भक्षणेन अजीर्णता भवेदिति। तथापि बालानां अतीवेष्टमेतत्फलं विभाव्यते।

कन्द इति आहारव्यंजनत्वेनोपयुज्यमानः कन्दविशेषोऽस्ति। तत्रापि लघ्वाकारः कण्डूकन्दः कश्चिदस्ति। तस्य च व्यञ्जनत्वेन निर्मितौ तत्रत्या कण्डूः जिह्वां व्यथयेत्। तन्निवारणप्रक्रियायां अस्य पत्राणि सिद्धौषधानि भवन्ति। कण्डूकन्दशकलानि बीजपूरपत्रैस्साकं ववथ्येरन यदि तत्रत्या कण्डूति विनश्येत्। ततस्तानि च व्यञ्जनत्वोपस्काराहार्णि भवेयुरिति गृहिण्यो वदन्ति।

# मनोवेदना

चित्रकायं दृष्ट्वा चित्तविचित्रं दाहे स्वदेहस्य
किंचित्रकायो भविष्यसि ? आलोचय भो भ्रातः !
अंग तेऽग्निदग्धं, वातो धातुश्च प्रकोपित स्यात्
गमयेद्यममन्दिरं त्वां विकृतं वाचयित्वा नाटयित्वा ॥

अस्मद्देशस्य देशजानां यद्धितं स्थितम्
तमन्वेषय विद्वन् ! तद्गवेषय निभृत ।
परदेशानुभवं प्रवर्तय मा कदापि सखेऽत्र
गोर्णासूच्या मा दम्भस्व सुललितं वसनम् ॥

धर्मबद्धा भूमिरियं कर्मशुद्धा भूमिरियम्
दैवभीताऽनन्तेयं पापभीता मातेयम्,
सत्यनिष्ठा धरणिरियं नित्यहृष्टा क्षोणिरियम्
किमेनां विभ्रंशिषसे पातकिन्! अथवा जिघांससि ?

कियच्छोभना वर्णव्यवस्था ! कियच्छोभना वृत्तिप्रतिष्ठा !
कियन्मनोहरा आश्रमधर्माः ! कियच्चेतोहरा दिव्योपहाराः!
कियद् ह्लादिन्यो भक्तिधाराः ! कियत्स्वादिन्यः पुराणगाथाः !
दूषयसि, नाशयसि, ध्वंसयसि, रे सकलमकलंकं स्वार्थकामिन् !

मूल्यान्युन्मूल्यन्तां हल्यानि च परिचाल्यन्ताम्
लौल्यानि अवरुध्यन्तां शल्यानि विपाटयन्ताम् ।
काल्यानि निर्वर्त्यन्तां पाल्यानि च परिपालयन्ताम्
तोल्येच्छाश्च विलुप्यन्तामितरैः अनुगुणा गुणाश्च शील्यन्ताम् ॥

# पदं कुह न्यसेयम् ?

पुरस्तात् कूपः पश्चात् च महागर्तः
पदं कुह न्यसेयं वद निगपदमिदम् ॥

संपादने दोषः, असंपादने शोषः,
आदाने महाभीतिः, प्रदानेपि धृतो हेतिः,
विभागे च प्रथिताऽनीतिः, स्वभोगेपि न गता क्षतिः,
गोपने चापराधः, प्रकाशने वा दुराचारः ॥ ॥ पुरस्तात् ॥

कुटुम्बश्च भर्तव्यः, दुर्दम्भश्चेष्टव्यः,
गृहनिर्वाहः कर्तव्यः, सहकारश्च दातव्यः,
आपद्धनमार्जितव्यं, आपत्तौ पातितव्यम्,
यत्किंचिद्रक्षितव्यं, तत्किंचिच्चार्पितव्यम् ॥ ॥ पुरस्तात् ॥

कुतस्संपाद्यं मया, त्रियेत वैराग्यं भिया,
कर्मशीलो भवेयं, अकर्मण्यो वसेयम्,
निरुत्साहो जीवेयं, निरुच्छ्वासस्तिष्ठेयम् ?
गौरवार्हः प्रचलेयं, क्रूरकार्यैः प्रचरेयम् ? ॥ पुरस्तात् ॥

जन्मशताब्दमहोत्सवप्रीत्यर्थम् —



## ॥ स्मर्तव्यो देशबन्धुः सः ॥

सुदिने पञ्चमे जातो मासे नाम्ना नवाम्बरे ।
चित्तरंजनदासोऽयं वंगदेशमहाकविः ॥

माता विस्तारिणीदेवी पिता भुवनमोहनः ।
भार्या वासन्तिदेवी वै पुत्रश्च चिररंजनः ॥

कर्णवद्दानशूरः स पत्रकारोऽग्रणीस्तथा ।
यदा तत्याज सर्वस्वं "देशबन्धु" स्तदाऽभवत् ॥

भारते नैकपत्राणि तेन संपादितानि वै ।
मर्मज्ञश्च विधिज्ञश्च श्रीयुतश्चित्तरंजनः ॥

ज्येष्ठमासेऽसिते पक्ष येकादश्यां तिथौ तथा ।
परलोकं ययौ धीमान् श्रीयुतश्चित्तरंजनः ॥

— या. वि. देवासकरः,
वटपत्तनस्थः.

# सुभाषितानि

लेः श्री यन. रामनाथार्यः

वनेपि सिंहा मृगमांसभक्षिणः बुभुक्षिता नैव तृणं चरन्ति।
एवं कुलीना व्यसनाभिभूताः न नीचकर्माणि समाचरन्ति ॥ ३५७ ॥

Even though hungry, lions eat only the flesh of animals and not grass. Persons of great lineage, do not perform unworthy acts, even in times of distress.

त्यजे त्क्षुधार्तो महिलां स्वपुत्रं खादे त्क्षुधार्ता भुजंगी स्वमंडम्।
बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्करुणा भवन्ति ॥३५८॥

People afflicted by hunger forget even their wives and children, snakes smitten by hunger eat away even their own eggs, what sins do hungry persons do not comit! People in want become hard-hearted.

गते शोको न कर्तव्यः भाविनं नैव चिन्तयेत्।
वर्तमानेषु कार्येषु चिन्तयन्ति विचक्षणाः ॥ ॥ ३५९ ॥

Wise men do not grieve over the past nor

feel worried over their future. They always act in the present.

करस्थ मुदकं त्यक्त्वा घनस्थ मभिवांछति ।
सिद्धमन्नं परित्यज्य भिक्षा मटति दुर्मतिः ॥ ॥ ३६० ॥

Forsaking the food on hand, foolish persons wander abount begging. It is like giving up the water on hand and looking up to the clouds for water.

अनाहृताः स्वयं यान्ति रसास्वादविलोलुपाः ।
निवारिता न गच्छन्ति मक्षिका इव भिक्षुकाः ॥ ॥ ३६१ ॥

Like flies beggars come of their own accord uninvited, greedy to taste delicious food; though asked to go they never leave.

( सशेषम् )

# छात्रोद्बोधनम्

(१)

यशश्च मानं च ददाति विद्या
धनं च धर्मं च करोति विद्या ।
नेत्रं हि सर्वस्य जनस्य विद्या
हे बाल! विद्याध्ययनं कुरु त्वम् ॥

(२)

हे छात्र नम्रो भव याहि शालां
गुरुं समागम्य लभस्व विद्याम् ।
स्थानं सुयोग्यं समवाप्य लोके
धनं यथेच्छं च ततः सुखं च ॥

(३)

प्रीणीहि चांबां जनकं च नित्यं
गुरूंश्च वृद्धानपि पूजय त्वम् ।
वटो! स्वविद्यागुरवे प्रयच्छ
समादरं प्रेम सुहृज्जनेभ्यः ॥

(४)

पाठे प्रमादी न कदापि भूयाः
सेवासु दक्षो भव पाठदातुः ।
सेवा हि लोके करणं फलानां
सेवां विना नैव फलन्ति यत्नाः ॥

(५)

देवं स्मर त्वं प्रथमं प्रभाते
शौचं ततः स्नानमथो कुरु त्वम्
स्वच्छानि वस्त्राणि धरस्व नित्यम्
भूयाः सदाचारपरो महेच्छः ॥

(६)

बटो कुरु त्वं समयेन कार्यं
आयूंषि चाल्पानि भवन्ति नृणाम् ।
तत्रापि कालस्य वृथाव्ययश्चेत्
न कापि ते हानिरितोऽधिकास्ति ॥

(७)

मद्यः प्रभाते परिमुञ्च शय्यां
क्रमेण शालामुपतिष्ठ नित्यम् ।
कालेऽप्रमत्तस्तु पठेः स्वपाठान्
फलन्ति कार्याण्यवधौ कृतानि ॥

(८)

हे छात्र ! जीवेषु दयां कुरुष्व
मृगीषु वत्सासु च गोषु नित्यम् ।
हानिं न कस्यापि कदापि कुर्याः
परस्य हानिर्निजहानयेऽस्ति ॥

(९)

हसेर्न तुन्दिं खरणं कुणिं वा
विलोक्य काणं बधिरं निकुब्जम् ।
सदा दयालुर्भव निर्धनेषु
रुग्णेषु भीतेषु च बालकेषु ॥

(१०)

सत्यो भव त्वं मनसा सदैव
वाचाऽपि सत्यो ननु कर्मणा च ।
न देहि गालीश्च वटो! असद्भ्यः
न निन्द नीतिं विदुषां कदापि ॥

(११)

भाषस्व सत्यं प्रतिपद्य देवं
सत्यं हि सर्वेश्वररूपमाहुः ।
तस्यैव भक्तो भव शीलशालिन्
स एव दुःखे तव रक्षकोऽस्ति ॥

(१२)

सदैव भक्तो भव भारतस्य
सदैव भक्तो भव मातृभूमेः ।
नित्यं च भक्तो भव संस्कृतस्य तु
नित्यं च भक्तो निजसंस्कृतेश्च ॥

## अपराह्णच्छायान्यायः - १२

"अवरः"

---

अहोरात्रम् दिनम्। अहर्भागस्य रात्रिभागस्य च यः संधिकालः सा सन्ध्या। सा सन्ध्या उभयथा भवति प्रातःसंध्या, सायंसंध्याचेति। अहर्भागास्तु पञ्चधा विभक्ताः। (1) प्रातःकालः (2) संगवः (पूर्वाह्णः) (3) मध्याह्नः (4) अपराह्णः (5) सायह्नः इति। प्रातस्सायं सन्ध्याभ्यां साकम् अहर्भागाः सप्तेत्यपि व्यवहारसौकर्यमनुरुध्य वक्तुम् युक्तम्।

तत्र अपराह्ण भागे या छाया तस्या इदानीं प्रसंगः। अस्य न्यायस्य विवक्षिते उपमेयप्रकरणे अपराह्णच्छायावदिति समन्वयः।

उदाहरणविधया सज्जनमैत्री गृह्यताम्। सा हि प्रथमम् परिचयमात्रा ततः सहवासरूपा, अन्ते चैकात्म्यरूपा च भवति। प्रथमं उद्भूता अनन्तरं प्रवृद्धा, अन्ते सुस्थिरा च यथा सज्जनमैत्री भवति तथैव दुर्जनानां मैत्री प्रथमं महताऽऽडम्बरेण परिदृश्यमाना क्रमेण वैभवविहीना निहीना च भूत्वाऽन्ते लुप्तप्राया च भवति। पूर्वाह्णच्छाया क्रमेण ह्रासं गच्छन्ती मध्याह्नेऽन्तम् गच्छति। अपराह्णच्छाया तु क्रमाद्वृद्धिं गच्छन्ती आसायमतिशेते।

सज्जनमैत्री अपराह्णच्छायावद्भवति चेत् दुर्जनमैत्री पूर्वाह्णच्छायावद्भवति। पूर्वाह्णाऽपराह्णच्छाययोः दुर्जनसुजनमित्रभावयोश्च उपमानोपमेयभावः संगच्छते।

दुर्जनमैत्री पूर्वाह्णच्छायावदिति सुजनमैत्री अपराह्णच्छायावदिति च यथायोग्यम् समन्वयः ।

अपराह्णच्छायान्यायः उपलक्षणम् । अनेन पूर्वाह्णच्छाया न्यायोऽपि गृह्यते किन्तु व्यतिरेकविधया । अस्य न्यायस्य उपमानोपक्षेरणे एव तात्पर्यम् । अतः तत्सादृश्येन अपराह्णच्छायान्यायः गृह्यते, समन्वयस्तु व्यतिरेकविधयेति स्पष्टमेव ।

अनेन एकविधं सामान्यीकरणमपि संभवति । यत्र यत्र क्रमाभिवृद्धिः तत्र तत्र अपराह्णच्छायान्यायस्य, एवं यत्र क्रमह्रासः तत्र पूर्वाह्णच्छायान्यायस्य च अवकाशो भवतीति । विशेषे प्रसिद्धानां सामान्यीकरणे प्रवर्तिते यथायोगं तस्य विनियोगः संभवति ।

एवं च अपराह्णच्छायान्यायेन क्रमाभिवृद्धिर्विवक्षिता । यत्र उपमेये क्रमाभिवृद्धिः परिदृश्यते तत्र उपमानविधया अपराह्णच्छायान्यायोऽवतरति ।



१६

# ऋषिमूषिकयोः कथा

अस्ति कस्मिंश्चित् अरण्ये महातपा नाम मुनिः। तस्य अधिकतपोयुक्तस्य महात्मनः दर्शनार्थं देशस्य विविधस्थलेभ्यः जना अनारत आगच्छन्ति स्म। तस्य आश्रमः कस्याश्चन महानद्यास्तीरे आसीत्। बहवः पादपा छायादायिनः आश्रमं निरातपं कुर्वन्ति स्म। अन्येपि च केचित् मुनिवराः तत्र कुटीरेषु अवसन्। ऋषिशिष्याश्च गुरोस्सेवायां अप्रमत्ताः वेदशास्त्रादीन् अभ्यस्यन्।

तस्मिन् आश्रमे लघुः कश्चित् मूषिकः आसीत्। स तत्र पतितान् नीवारधान्यकणान् आहारसमये गलितानन्नकणांश्च भक्षयित्वा जीवन्नास्ते। स लघुकायः शीघ्रगतिः स्निग्धदेहः द्रष्टॄणां मोदं आपादयन् आसीत्। न कोपि तं भीषयति स्म निवारयति स्म वा स्वकार्यात्।

एवं स्थिते तत्रत्यः कश्चन मार्जालः तमपश्यत्। स च दर्शनमात्रेणैव तं गृहीतुमनाः मूषिकं प्रत्यधावत्। मूषिकोपि भीतभीतः तत्रत्यं किंचन बिलं प्राविशत्। मार्जालश्च मूषिकं ग्रहीतुं तद्बहिरागमनमाकांक्षमाणः पार्श्वे निरीक्षते स्म। मूषिकस्तु बिडालभयात् बहिरागन्तु अशक्तः क्षुधा पीडितश्च बहिः मुखं प्रदर्शयन् अन्तर्गच्छन् क्लिश्नाति स्म।

महातपाः एतत्सर्वं अवालोकयत्। तस्य मनः मूषिके प्रसन्नं अभवत्। तेन सः स्वसङ्कल्पेन मूषिकं बिडालरूपिणं अकरोत्। तदा स बिडालरूपी मूषिकः बहिरागत्य यथेच्छं आहारादिकं स्वीकृत्य सुखमवसत्।

गतेषु केषुचिद्दिनेषु आश्रमस्थः कश्चित् कुक्कुरः तं हन्तुं मन्वधावत्। तत् दृष्ट्वा दयमानः स ऋषिः तं शुनकं मेवाकरोत्। शुनकबाधानिवृत्तः स मूषिक-शुनकः अरण्ये स्वेच्छया विचरितुं मारभत। अथ कदाचित् कश्चन व्याघ्रः तं

हन्तुमुपाद्रवत् । तत् ज्ञानदृष्ट्या ज्ञात्वा स मुनिः तं शार्दूलमेव व्यधात् । स मूषिकशार्दूलः वने यथेच्छं विहरन् तपोवने एकस्य तरोः मूले शेते स्म निर्भयः ।

मुनिदर्शनार्थं आगच्छन्तो जनाः तं दृष्ट्वा कथयन्ति स्म "भोः अयं मूषिकः सन् मुनेर्दयया बिडालीभूय शुनकीभूय इदानीं व्याघ्रीभवति" इति । तमात्मवृत्तान्तं जनैः कथ्यमानं आत्महैन्यताकरं मन्यमानः स व्याघ्रः मनस्येव मचिन्तयत – अयं मुनिः यावत् जीवति तावन्मे इय मपकीर्तिः न नश्यति । अतः इमं हन्याम्" इति ।

महातपाश्च मूषिकशार्दूलस्य दुरालोचनं दिव्यनेत्रेण ज्ञात्वा तं यथापूर्वं मूषिकमेव अकरोत् ।

अतः – नीचः श्लाघ्यपदं प्राप्य स्वामिनं हन्तु मिच्छति ।
व्याघ्रीकृतो मूषिकश्च मुनिं हन्तुं यथोद्यतः ॥

# कोविदपरीक्षां

## उत्तीर्य

## संकृस्तपंडितपदवीं निर्वहत !

एतत्समीया कोविदपरीक्षा आंध्रसर्वकारेण उपाध्यायत्व-योग्या अंगीकृता । अतः तत्र उत्तीर्य पंडिता भवत ।

इति
ति. कं. तिरुवेङ्कटाचार्यः
प्रधानमन्त्री.



# श्रीमन्मळवाणमहामुनीनां

## षट्छताब्द्युत्सवपूजाकुसुमम्

श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम् ।
यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ॥
वन्दे वरवराभिख्यं वाग्वैशद्यप्रतिष्ठितम् ।
प्रथितोभयवेदान्तममन्वयसमुन्नतम् ॥
सेवे शेषफणीन्द्रस्य रूपमुज्झित्य भूतले ।
मादृशाऽकिंचनत्राणायातं वरवरं मुनिम् ॥
ईडे द्राविडवेदान्तरहस्यार्थप्रबोधकम् ।
सौम्यजामातरं मौनिं श्रीवैष्णवकुलोद्वहम् ॥
गाहे यतीन्द्रप्रवणव्याख्यागम्भीरसूक्तिषु ।
रहस्यरत्नोद्धारोपकरणायितमूर्तिषु ॥
अवलम्बे पदयुगं रम्यजामातृयोगिनः ।
अविलम्बं मुमुक्षूणामालम्बमुडुपं यथा ॥
उपासे सौम्यजामातृपादच्छायां सदा हृदि ।
संसारमरुकान्तारश्रान्तमादृशसान्त्वनीम् ॥

# श्रीमद्वरवरमुनीन्द्रभक्तामृतम्

प्राप्तिस्थानम् – श्रीकांची प्रतिवादिभयङ्करः अण्णङ्गराचार्यः,
कांचीपुरम् ३

---

एष च ग्रन्थः वैदिकमनोहरायाः 173–175 संचिकात्वेन प्रकाशितो विजयते । श्रीवैष्णवसंप्रदायकूटस्थस्य मणवाळमामुनिनाम्ना प्रथितस्य वरवरमुनेः षष्ठशताब्दपूर्ति (3–11–70) सन्दर्भे श्रीमद्भिः प्रतिवादि भयङ्करै रण्णङ्गराचार्यैः प्रकाशितेयं स्वीया कृतिः ।

अत्र श्रीमद्वरवरमुनीन्द्रवैभवं, श्लोकषट्कती, अष्टोत्तरशतनाम-स्तोत्रम्, मंगलमालिकास्तोत्रम्, दण्डकस्तुतिः, वात्सल्यसर्वस्वम्, दया-सर्वस्वम्, श्रीतत्त्वसर्वस्वम्, सकलपूर्वाचार्यसूक्त्यैककण्ठम् इति स्थूल-विभागास्सन्ति ।

अत्र वैभवे मुनिवरस्य चरित्रं सकलमप्यविकलं गद्यरूपेण प्रति-पादितम्। षट्कत्यां तु श्रीशैलेशदयापात्रस्तोत्रम्, श्रीवरवरमुनिकर्णामृत-स्तोत्रम्, श्रीमद्वरवरमुनिवैभवस्तोत्रम्, स्तोत्ररसायनम्, मङ्गळाशासन-स्तोत्रम्, युगचतुष्टयस्तोत्रम्, संवत्सरमालास्तोत्रम्, अयनर्तुमासपक्षतिथि-नक्षत्ररूपाणि स्तोत्राणि, सहस्रनामस्तोत्रम्, तदधिकम् अष्टोत्तरशतनाम स्तोत्रम् च निबद्धानि। वात्सल्यसर्वस्वम्, दयासर्वस्वम् च प्रत्येकम् द्विशतश्लोकै रलंकृते। अनन्तरग्रन्थश्च गद्यरूपेणोपनिबद्धो विराजते । दोषेषु गुणत्वबुद्धिरूपम् वात्सल्यलक्षणम्, परदुःखदुःखित्वरूपं दयालक्षणं च वात्सल्यदयासर्वस्वयोः सम्यक् समर्थिते। अत्र बहवो वादविवादाः प्रस्तुतास्समाहिताश्च निस्संशयम् । अत्रत्यानि च पद्यानि द्राक्षापाकपूर्णानि

ललितशय्यावशात् गद्यादपि सुगमानि स्वदन्ते विविधविचित्रगमनैः। तत्रापि दयासर्वस्वं जिज्ञासु देशिकसंभाषणरूपतया निबद्धं अतितरामानन्दयति सहृदयान्।

श्रीवेदान्तदेशिकाचार्याणां अभिप्रायाः लोकाचार्यादीनां च अभिप्रायाः सर्वप्रकारैरेकाकारा एवेति नवीनैश्च कुचोद्यकल्पनमसंगतमिति च तत्तदुक्तिसमन्वयपूर्वकम् न्यरूपयन्नेते। अयं च ग्रन्थः श्रीवैष्णवैस्सर्वैरध्येतव्योऽनुसंधेयश्च।



# पदार्थविज्ञानसारः

## [पूर्वानुबन्धः]

शिष्यः - समुद्रस्य वृद्धिह्रासावर्थात् गोथारभाटेति लोकप्रसिद्धौ कस्माद्भवतः? तत् किं महाशय मामनुगृह्य वक्ष्यसि ?

गुरुः - प्रतिदिनम् प्रहरद्वयपर्यन्तममावनिर्वाच्यनिखिलजलाधारनदीनदपतिः समुद्रो यद्वृद्धिं प्राप्नोति तल्लोकैर्गोथारेति प्रोच्यते। तदनन्तरम् तस्य यो ह्रासः तन्नाम भाटेति प्रसिद्धम्। अनेन प्रकारेण दक्षिणतः प्रारभ्योत्तरस्यां प्रतिदिनम् स्रोतो गच्छति। वृद्धौ पूर्णायां दण्डार्धानन्तरमुत्तरतो दक्षिणस्यां गच्छति। अनेन च ह्रासे परिसमाप्ते दण्डार्धानन्तरं पुनरुत्तरस्यां गच्छति।

शिष्यः - सामुद्रीयजलाकर्षणे चन्द्रसूर्ययोर्मध्ये कस्याधिका शक्तिः ?

गुरुः - सूर्यात् त्रिगुणा शक्तिश्चन्द्रस्येति लोकैरनुमीयते।

शिष्यः - समयविशेषे समुद्रस्य ह्रासवृद्ध्योः न्यूनाधिक्ये यत् कारणम् तत् किमनुग्रहम् विधाय माम् प्रतिवक्ष्यसि ?

गुरुः - यदा चन्द्रः परिपूर्णो नूतनो वा भवति। तस्मिन् काले सूर्यचन्द्रमसौ सन्निकर्षेण विप्रकर्षेण वा एकस्यां रेखायां स्थित्वा पृथिवीं समाकर्षतः तदा वृद्धेर्बाहुल्यम् भवति। परन्तु यदा तौ चन्द्रसूर्यौ विषमे भागे तिष्ठतः तदा एकस्यां चन्द्रीयाकर्षणतोऽपरस्यां दिनकराकर्षणतो ह्रासाधिक्यम् भवति। चन्द्रीयचतुर्थकलावधि द्वादशकलापर्यन्त मेतादृशं ह्रासाधिक्यं वेदितव्यम्।

6

शिष्यः - पयसा मेतादृश्गमनागमने किं फलमस्ति ?

गुरुः - त्वया हि श्रुतम् यत् सूर्यचन्द्रमसो राकर्षणेन पयसां वृद्धिह्रासौ जायेते। तच्च वयोर्बाहुल्यज्ञतेन त्वया सम्यग्वेदितव्यम्। पयसां-गतागतैर्जलीयाविलचयः प्रणश्यति। यतो हि गतागताभ्या-मन्तरेण जलम् मलिनतरम् भूत्वा पूतिगन्धाकुलम् भवति। एवम् वणिजां वाणिज्यकर्मणि बृहन्नौभिर्गमनागमनम् दुस्साध्यम् भवति।

शिष्यः - याश्च नद्यः समुद्रे प्रविशन्ति ताभिः समुद्रोपचयः कथम् न स्यात् ?

गुरुः - तत्रैतत् कारणम्। नदीनां यावज्जलम् समुद्रे प्रविशति तदीयम् तावज्जलम् प्रचण्डचण्डकरकरकलापतापै र्बाष्पाकारेणोर्ध्वं समुत्तिष्ठति।

शिष्यः - किं समुद्रस्य गांभीर्यमतिबृहन्न ?

गुरुः - तस्य सर्वत्र न समानगांभीर्यम्। परन्तु क्वचित् क्वचिदेतादृ-ग्गांभीर्यं वर्तते, यत् षष्ट्यधिकपञ्चशतोत्तरसहस्रहस्तमितया रज्वापि मृत्तिकास्पर्शो न भवति।

शिष्यः - समुद्रस्यैतादृग्गांभीर्यं कस्मादभूत् ?

गुरुः - निजबोधानुसारेण परमेश्वरः समुचितरूपेण जलम् भूमिम् च स्थापयामास। न चात्र संदेहोऽस्ति। तस्य परमेश्वरस्यैतादृशी-च्छाऽभवत् समुद्रोयम् महागम्भीरो भवत्विति। स तु महागभीर-भावेनाशेषजलम् धारयति। तेन हेतुना पृथिव्याः कृत्स्नमंशम् प्लावयितुम् न शक्नोति। एतस्मादेवाऽनेका शुष्का भूमिर्दृश्यते।

शिष्यः - कथम् समुद्रस्य जलमीदृक् लवणमयम् भवति ?

गुरुः - अत्रैतत् कारणमस्ति । लवणाक्तत्वेन तस्मिन् जले दुर्गन्धो न जायते । एवम् सामुद्रेण लवणेन लोकानां महोपकारो भवति ।

शिष्यः - किमहो समुद्राल्लवणम् जायते ?

गुरुः - सामुद्रेभ्यो जलेभ्यो लोकैर्बहुतरं लवणमुत्पाद्यते, यतः समुद्रतीरे बहुशो विपुलान् गर्तान् खनित्वा तेषु लवणाक्तम् नीरम् प्रवेशयन्ति, अनन्तरं किरणमालिनः किरणकलापैस्तस्मिन्नीरे शुष्के सति तदवशिष्टभागैः सैन्धवाख्यलवणम् भवति ।

शिष्यः - मनुष्याणां विषये समुद्रः कीदृगुपकारी भवति ?

गुरुः - त्वया किं न ज्ञायते समुद्रजैर्मत्स्यैर्मनुष्याणां यदुपकारो भवति ? सागराभ्यन्तरे असंख्याकाः क्षुद्रा बृहन्तश्च मत्स्यास्सन्ति, ये च मत्स्या भक्षणानर्हास्तेह्यपरापरकर्मसूपयुक्ता भवन्ति । त्वया किमेतन्न श्रुतम् यत् समुद्रो वाणिज्यकर्मसु महोपकारी, यतः समुद्रयानेनातिदूरदेशम् गत्वा वणिग्भिर्वाणिज्यकर्म क्रियते । एवमेतस्मिन् कर्मणि बृहन्नौकानिर्मातारो नाविकाश्च महोपकारं लभन्ते ।

शिष्यः - समुद्रः कथमात्मवेलाभ्यन्तरे सततं तिष्ठति ।

गुरुः - सृष्टिकाले चेदृगिच्छया परमेश्वरोऽतिभीषणसमुद्रायाऽऽज्ञामिमां दत्तवान् । त्वयैतत्सीमापर्यन्तमेव गन्तव्यम् । वेलाबाह्ये क्वचिदपि न गन्तव्यम् । एवमत्र ते महातरङ्गा बाधां न गमिष्यन्ति, सीमातिक्रमणे ते चाशक्या भविष्यन्तीति ।

शिष्यः - सर्वेषां देशानां जलोद्गारिगर्तानां विपुलनदीनां समुत्पादने

समुद्रादसंख्यबाष्पमुत्तिष्ठति इत्येवमहं श्रुतवान्। यदि समीरणतो जलम् गुरुतरं तदा केन रूपेणोर्ध्वे तदुत्तिष्ठति ?

गुरुः - एतद्विवेचनं तवातियुक्तम् पूर्वम्मयोक्तम्। स्थिरवायुतोपि जलम् गुरुतरम्। तथापि तस्यैतादृग्गुणोस्ति यद्वायुतो जलम् लघुभवितु मर्हति। तस्मादूर्ध्वे समुत्तिष्ठति। त्वया किं पाकसमये नावलोकितम् कति जलानि बाष्पाणि भूत्वा ऊर्ध्वे समुत्तिष्ठन्तीति। अत एवैतत् साधारणदृष्टांतेन त्वया बोद्धव्यम् यथा वियति जलमुत्तिष्ठति। प्राज्ञतमैरेवमुच्यते बिन्दुमात्रजलम् तापेन दशगुणं भवतुमर्हतीति। त्वयैतदवलोकितम्। किन्तु दृष्टवतोपि ते बोधो नाभवत्। पश्य बालकैरेरण्डक्षीरं फेनयित्वा तृणादिना वर्तुलाकारं यन्त्रं निर्माय तत्संपर्कवशात् फूत्कारेणोर्ध्वे बिम्बाकारैरुत्क्षिप्यते फेनश्चोर्ध्वे समुत्तिष्ठति, यस्मात्तदा वायुतोपि स लघुर्भवति।

शिष्यः - समुद्रादूर्ध्वे यद्बाष्पमुत्तिष्ठति तत्कारणम् किम् ?

गुरुः - मार्तण्डीयप्रचण्डतापैरुत्तप्ते जले तस्माद्बाष्पमुत्तिष्ठति।

शिष्यः - यदि समुद्राद्बाष्पमुत्थाय मेघो जायते, तस्माच्च मेघात् वृष्टिर्भवति, तदा तद्वृष्टेर्जलम् कथम् लवणमयम् न स्यात् ?

गुरुः - समुद्रस्य लवणाख्यजलीयपरमाण्वोर्मध्ये जलीयपरमाणुरतिलघुः। एतस्मादेव चण्डभानुप्रचण्डतरतापेन जलीयलघुपरमाणु र्बाष्पं भूत्वोर्ध्वे व्रजति।

(सशेषः)

# साधारण वत्सर दक्षिणायन परीक्षाफलितांशाः

# संस्कृतभाषाप्रचारिणी सभा, चित्तूरु.

# Samskrita Bhasha Pracharini Sabha, Chittoor.

The following are the Register numbers of the candidates who got successful in the Examinations held on 5th, 6th and 7th September, 1970.

## परिचयः

I Class 74 99 101 508 545 547 549
550 551 552 557 558 559 560 561 562 584
585 586 587 588 589 591 592 593 594 595
596 598 599 600 601 602 604 605 606 607
610 611 614 617 618 628 669 679 690 701
702 704 718 720 721 725 726 734 737 747
750 752 754 758 766 767 810 813 814 817
821 835 836 838 839 and 840.

II Class 1 6 7 16 17 18 25
40 65 69 70 72 73 76 78 94 104
105 106 107 108 109 111 112 113 114 119
122 123 125 126 129 132 135 136 138 143
145 146 168 171 172 175 176 191 209 215
267 295 358 367 370 405 410 418 419 420

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| 421 | 423 | 424 | 425 | 430 | 445 | 449 | 450 | 490 | 492 |
| 493 | 497 | 500 | 509 | 510 | 511 | 514 | 515 | 516 | 518 |
| 520 | 548 | 553 | 590 | 597 | 608 | 612 | 613 | 616 | 634 |
| 641 | 660 | 661 | 662 | 663 | 664 | 665 | 666 | 667 | 668 |
| 670 | 671 | 678 | 675 | 677 | 698 | 703 | 705 | 706 | 707 |
| 709 | 717 | 719 | 724 | 727 | 728 | 729 | 781 | 782 | 733 |
| 786 | 738 | 742 | 751 | 753 | 755 | 756 | 761 | 752 | 763 |
| 764 | 765 | 801 | 803 | 804 | 806 | 807 | 809 | 811 | 816 |
| 822 | and | 844 | | | | | | | |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| III Class | | | 2 | 3 | 10 | 15 | 19 | 24 | 39 |
| 44 | 59 | 62 | 63 | 64 | 66 | 67 | 75 | 77 | 110 |
| 120 | 121 | 124 | 128 | 131 | 137 | 139 | 140 | 141 | 142 |
| 148 | 150 | 169 | 170 | 173 | 174 | 177 | 180 | 181 | 192 |
| 193 | 195 | 199 | 201 | 202 | 203 | 204 | 205 | 203 | 208 |
| 210 | 211 | 214 | 216 | 217 | 218 | 219 | 220 | 268 | 272 |
| 273 | 275 | 277 | 278 | 279 | 280 | 281 | 283 | 286 | 289 |
| 290 | 293 | 296 | 301 | 302 | 834 | 335 | 336 | 337 | 338 |
| 340 | 366 | 369 | [illegible] | 388 | 389 | 390 | 391 | 392 | 404 |
| 406 | 408 | 409 | 411 | 412 | 422 | 423 | 427 | 431 | 432 |
| 434 | 437 | 438 | 440 | 442 | 443 | 446 | 447 | 448 | 494 |
| 495 | 499 | 501 | 502 | 503 | 514 | 519 | 521 | 522 | 541 |
| 542 | 544 | 624 | 625 | 626 | 627 | 629 | 635 | 642 | 644 |
| 648 | 653 | 654 | 674 | 676 | 684 | 689 | 691 | 692 | 708 |
| 722 | 723 | 730 | 743 | 744 | 746 | 748 | 759 | 768 | 808 |
| 819 | 823 | 831 | 832 | and | 842. | | | | |

## अभिज्ञः

I Class 30 31 81 186 187 234 236
242 252 317 320 353 360 361 376 496 564
565 566 630 631 772 and 829.

II Class 32 49 50 52 53 56 57
83 85 86 87 102 103 152 153 184 188
189 190 221 227 228 229 231 233 235 237
238 241 243 245 250 251 313 321 322 371
372 373 374 375 394 395 396 451 453 457
523 527 567 652 656 678 710 712 713 715
770 771 773 779 782 783 784 826 827 828
830 and 846.

III lass 27 33 34 35 36 46 47
48 51 54 55 151 154 157 159 185 222
223 224 226 230 232 239 244 246 249 271
309 310 311 314 315 316 318 319 342 346
347 393 454 458 525 526 568 569 571 572
636 637 638 650 651 711 714 776 777 780
and 781.

## विचक्षणः

I Class 349 365 576 632 633 and 785

II Class 89 90 91 115 160 166 254
255 258 259 348 355 363 377 379 380 463
464 484 528 529 533 534 575 578 658 786
787 and 789

III Class 92 116 117 118 163 164 165
256 260 270 362 364 378 397 398 399 400
401 430 461 462 483 485 486 487 513 530
531 536 577 579 639 657 659 788 790 792
and 800.

## समर्थः

I Class :— Nil
II Class :— 261 263 and 470
III Class :— 262 351 465 466 469 481 506 537
538 794 833 and 834
Passed in I part only :— 467 468 580 581 and 793
Passed in II part only :— 324 331 350 478 and 795

## कोविदः

I Class :— Nil
II Class :— 385 only
III Class :— 384 386 and 488.
Passed in I part only :— 266 only
Passed in II and III parts only :— 482 582 583 797
and 798.
Passed in I and V parts only :— 796 only
Passed in III part only :— 58 and 799
Passed in V part only :— 352 and 716
Passed in II III IV and V parts only :— 383 only

The following candidates stood first in First Class. Prizes will be awarded to them in due course.

Parichaya :— 589 J. Veeraraghavan, Madurai.
Abhigna — 361 D. L Gomathi, Thirunagar.
Vichakshana - 632 K. Ramakalyani, Metturdam.

Chittoor,
15-10-70.

K. SREENIVASACHARYA,
*Parikshamantry.*

## साधारणवर्ष दक्षिणायन परीक्षासु

## उत्तीर्णाः 628

| परीक्षाः | अभ्यर्थिनः | उपस्थिताः | उत्तीर्णाः प्र. श्रे. | उत्तीर्णाः द्वि. श्रे. | उत्तीर्णाः तृ. श्रे. | खण्डशः | विशेषांशाः |
|---|---|---|---|---|---|---|---|
| परिचयः | 508 | 460 | 73 | 139 | 152 | — | |
| अभिज्ञः | 189 | 170 | 23 | 69 | 58 | — | |
| विचक्षणः | 85 | 78 | 6 | 29 | 38 | — | |
| समर्थः | 45 | 39 | — | 3 | 12 | 10 | |
| कोविदः | 19 | 18 | — | 1 | 3 | 12 | |
| | 846 | 765 | 102 | 241 | 263 | 22 | |

सं. भा. प्र. सभा,
15—10—70,

की० श्रीनिवासाचार्यः,
परीक्षामन्त्री.

## साधारणवर्ष दक्षिणायन परीक्षासु

## उपयुक्तानि केन्द्राणि-44

(1) अम्बत्तूरु (2) अनकापल्ली (3) अनन्तपुरम् (4) आलगड्डा (5) इन्द्रप्रस्थम् (6) इलंगाडु (7) उरवकोंडा (8) कडपा (9) काकिनाडा (10) कोयबत्तुरु (11) कोंपेट (12) गुण्टूरु (13) चित्तूरु (14) चिदम्बरम् (15) तञ्जावूरु (16) तिरुचिरापल्ली (17) तिरुवल्लिक्केणी (18) तिरुनेल्वेली (19) तिरुनगर (20) तिरुपति (21) तिरुवेङ्गाडु (22) तेरिलंदूरु (23) तेनाली (24) त्यागरायनगर (25) दोम्मरनन्द्याला (26) नंगनल्लूरु (27) नागपट्टणम् (28) नेल्लूरु (29) पेद्दापुरम् (30) भीमवरम् (31) मन्त्रालयः (32) मदुरै (ए) (33) मदुरै (वि) (34) मन्नार्गुडि (35) मेट्टूरडाम (36) राजमन्ड्री (37) वरंगल् (38) विजयवाडा (39) विजयनगरम् (40) विष्णुपुरम् (41) शाहपूर (42) श्रीरामपुरम् (43) सेलम् (44) हैदराबाद ।



# विद्वत्सु विज्ञाप्यते



संस्कृतभाषाप्रचारिण्यास्सभायाः रजतोत्सवसन्नाहः प्रचलति । उत्सवविशेषांकश्च सम्मुद्रयते । तत्परिपूर्तिमधिगत्य उत्सवदिनादिनिर्णयः क्रियेत । मन्ये प्रायशः जनवरीमासे स महोत्सवः निर्वर्त्येतेति ।

तत्संदर्भे नवनवरचितानां प्रकाशितानां वा संस्कृतग्रन्थानां प्रदर्शनीमपि निर्वोढुं व्यवस्यति सभा । अतः कृपया संस्कृते नव-प्रकाशिताः, अप्रकाशिताः करलिपिरूपेण वर्तमाना वा ग्रन्थाः पत्रपत्रिकाश्च प्रेषयित्वा प्रदर्शिनीं सविशेषं विभूषयन्त्विति प्रार्थये ।

अपि च संस्कृतप्रचारसामग्री तत्तत्संस्थाभिरुपयोज्यमाना सापि प्रेषणीया ।

यद्यपि महान् ग्रन्थराशिः नवनिर्मिता वर्तते भारते, तथापि तत्तद्रचयितृ संकेताद्यपरिज्ञानात् प्रत्येकं प्रार्थने अशक्ता वयं एतद्विज्ञापन-द्वारा अभ्यर्थयामहे यथाशक्ति सहयोगदानाय ।

इति प्रार्थयिता,

ति. कं. तिरुवेङ्कटाचार्यः,

प्रधानमन्त्री.

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
*R. N. 8145/60.* *Postal R. No. H. 493*

# गैर्वाणी

भारतसर्वकारेण पुरस्कृता च

## प्रहेलिकाः

वने वसति को वीरो योऽस्थिमांसविवर्जितः ।
असिवत्कुरुते कार्यं कार्यं कृत्वा वनं गतः ॥

॥ कुम्भकारदोरकः (सूत्रं) ॥

अयं च जले स्थाप्यते, आमकुम्भस्य भ्रममाणस्य कर्तने उपयोज्यते, पुनश्च जले पात्यते च ।

तरुण्याऽऽलिंगतः कण्ठे नितम्बस्थलमाश्रितः ।
गुरूणां सन्निधानेपि कः कूजति मुहुर्मुहुः ॥

॥ जलकुम्भः ॥

शमीगर्भस्य यो गर्भस्तस्य गर्भस्य यो रिपुः ।
रिपुगर्भस्य यो भर्ता स मे विष्णुः प्रसीदतु ॥

अर्थः -- शमीगर्भः शमीवृक्षसारः, तस्य गर्भः अग्निः, तस्य गर्भस्य तादृशशमीगर्भगर्भस्य अग्नेः यः रिपुः जलं, रिपुगर्भस्य तादृशशमीगर्भगर्भरिपुभूतस्य जलस्य गर्भभूतायाः लक्ष्म्याः, यः भर्ता पतिः, स विष्णुः मे प्रसीदतु ।

Published by Sri N. Ramanatha Iyer B. A; B. L., Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T K Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.) C 1500